* ओ३म *

# हवनमन्त्राः ।

❀ शुभकर्मसु ❀

उपयोगिनः

स्वस्तिवाचनशान्तिप्रकरणादिसहिताः

महर्षिदयानन्दसंकलिता

( संस्कारविधिग्रन्थात् पृथक्कृत्य प्रकाशिताः )

—:o:—

प्रकाशकः—

वज़ीरचन्द्र शर्मा अध्यक्ष—

वैदिक पुस्तकालय मोहनलाल रोड, लाहौर

आर्य्य सम्वत १९७२९४९०३८

ज्येष्ठ विक्रमी सं० १९९५—मई सन १९३८ ई०

दयानन्दाब्द ११४

ला० साहिबदित्तामल के अधिकार से

'जगजीत इलैक्ट्रिक प्रेस, मोहन लाल रोड, लाहौर ने

पं० वजीरचन्द्र शर्मा के लिये छापा ।

पन्तालीसवींवार ५००० ] [ मूल्य )॥

✲ ओ३म् ✲

# अथेश्वरस्तुतिप्रार्थनोपासना: ।

ओ३म् विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव॥ १॥ यजु० अध्या ३०। मंत्र ३॥

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥२॥ यजु० अ० १३॥ मंत्र ४ ॥ य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्यच्छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥३॥ यजु० अ० २५। मंत्र १३ ॥ यः प्राणतो निमिषतो महित्वैक इन्द्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥४॥ यजुः० अ० २३ मंत्र ३ ॥ येन द्यौरुग्रा पृथिवी च दृढः येन स्वः स्तभितं येन नाकः । यो अन्तरिक्षे

रजसो विमानः कस्मै देवाय हविषा विधेम ॥५॥
यजुः अ० ३२ । मन्त्र ६ ॥ प्रजापते न त्वदेता-
न्यन्यो विश्वा जातानि परिता बभूव। यत्का-
मास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो
रयीणाम् ॥६॥ ऋ० म० १० । सू० १२१ । मंत्र
१० ॥ स नो बन्धुर्जनिता स विधाता धामानि
वेद भुवनानि विश्वा । यत्र देवा अमृतमान-
शानास्तृतीये धामन्नध्यैरयन्त ॥७॥ यजु० अ०
३२॥ मंत्र १० ॥ अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जु
हुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ॥८॥
यजु० अ० ४० मंत्र १६ ॥

---

# अथ स्वस्तिवाचनम् ।

—:o:—

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं
रत्नधातमम् ॥१॥ स नः पितेव सूनवेऽग्ने सूपायनो

भव । सचस्वा नः स्वस्तये ॥२॥ ऋ० मं० १ सू०
१। मंत्र १ । ६ ॥ स्वस्ति नो मिमीतामश्विना
भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति पूषा
असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना
॥ ३ ॥ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति
भुवनस्य यस्पतिः बृहस्पतिं सर्वगणं स्वस्तये
स्वस्तय आदित्यासो भवन्तु नः ॥४॥ विश्वे
देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः
स्वस्तये । देवा अवन्त्वृभवः स्वस्तये स्वस्ति
नो रुद्राः पात्वंहसाः ॥ ५ ॥ स्वस्ति मित्रावरुणा
स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च
स्वस्ति नो अदिते कृधि ॥६॥ स्वस्ति पन्थाम-
नुचरेम सूर्याचन्द्रमसाविव । पुनर्ददताघ्नता
जानता सङ्गमेमहि ॥ ७ ॥ ऋ० मं० ५ । सू०
५१ ॥ ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा
अमृता ऋतज्ञः । ते नो रासन्तामुरुगायमद्य

यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥ ऋ० मं०
७ । सू० ३५ । मं० १५ ॥

येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः उक्थशुष्मान् वृषभरान्त्स्वप्नसस्तां आदित्यां अनुमदा स्वस्तये ॥ ६ ॥ नृचक्षसो अनिमिषन्तो अर्हणा बृहद्देवासो अमृतत्वमानशुः ज्योतीरथा अहिमाया अनागसो दिवो वर्ष्माणं वसते स्वस्तये ॥ १० ॥ सम्राजो ये सुवृधो यज्ञमाययुरपरिह्वृता दधिरे दिवि क्षयम् । तां आ विवास नमसा सुवृक्तिभिर्महो आदित्यां अदितिं स्वस्तये ॥ ११ ॥ को वः स्तोमं राधाति यं जुजोषथ विश्वे देवासो मनुषो यतिष्ठन । को वोऽध्वरं तुविजातो अरं करद्यो नः पर्षदत्यंहः स्वस्तये ॥१२॥ येभ्यो होत्रां प्रथमामायेजे मनुः समिद्धाग्निर्मनसा सप्तहोतृभिः त आदित्या अभयं शर्म यच्छत सुगा नः कर्त

सुपथा स्वस्तये ॥१३॥ य ईशिरे भुवनस्य प्रचेतसो विश्वस्य स्थातुर्जगतश्च मन्तवः । ते नः कृतादकृतादेनसस्पर्यद्या देवासः पिपृता स्वस्तये ॥१४॥ भरेष्विन्द्रं सुहवं हवामहेऽहोमुचं सुकृतं दैव्यं जनम् । अग्निं मित्रं वरुणं सातये भगं द्यावापृथिवी मरुतः स्वस्तये ॥१५॥ सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् । दैवीं नावं स्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये ॥ १६ ॥ विश्वे यजत्रा अधि वोचतोतये त्रायध्वं नो दुरेवाया अभिह्रुतः । सत्यया वो देवहूत्या हुवेम शृण्वतो देवा अवसे स्वस्तये ॥१७॥ अपामीवामप विश्वामनाहुतिमपारातिं दुर्विदत्रामघायतः । आरे देवा द्वेषो अस्मद्युयोतनोरुणः शर्म यच्छता स्वस्तये ॥१८॥ अरिष्टः स मर्तो विश्व एधते प्र प्रजाभिर्जायते धर्मणस्परि । यमादित्यासो नयथा सुनीति-

भिरति विश्वानि दुरिता स्वस्तये ॥ १६ ॥ यं देवासोऽवथ वाजसातौ यं शूरसाता मरुतो हि ते धने । प्रातर्यावाणं रथमिन्द्रसानासिमरिष्यन्तमा रुहेमा स्वस्तये ॥ २० ॥ स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति । स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥ २१ ॥ स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति । सा नो अमासो अरणे निपातु स्वावेशा भवतु देवगोपाः ॥ २२ ॥ ऋ० मं० १० । सू० ६३ ॥

इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशꣳसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ २३ ॥ यजु० अ० १ । मंत्र १ ।

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो
अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे
असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ २४ ॥
देवानां भद्रा सुमतिर्ऋजूयतां देवाना ँरातिर-
रभि नो निवर्त्तताम् । देवाना ँसख्यमुपसेदिमा
वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ २५ ॥
तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे
हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे
रक्षिता पायुरदब्धाः स्वस्तये ॥ २६ ॥ स्वस्ति
न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो
बृहस्पतिर्दधातु ॥ २७ ॥ भद्रं कर्णेभिः शृणुयाम
देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गै-
स्तुष्टुवा ँसस्तनूभिर्व्यशेमहि देवहितं यदायुः
॥ २८ ॥ यजुः अ० २५ । मन्त्र १४ । १५ ।
१८ १९ । २१ ॥

अग्न आयाहि वीतये गृणानो हव्यदातये ।
नि होता सत्सि बर्हिषि ॥२९॥ त्वमग्ने यज्ञानां
होता विश्वेषां हितः देवेभिर्मानुषे जने ॥३०॥
सामछन्द आ० प्रपा० १ । मन्त्र १ । २ ॥

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः ।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥३१॥
अथर्व० कां० १ ।अनु० १ । सू० १ । मन्त्र १ ॥

इति स्वस्तिवाचनम्

---

# अथ शान्तिप्रकरणम्

—:o:—

शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रा-
वरुणा रातहव्या । शमिन्द्रासोमा सुविताय शं
योः शन्न इन्द्रापूषणा वाजसातौ ॥१॥ शं नो
भगः शमु नः शंसो अस्तु शन्नः पुरन्धिः शमु
सन्तु रायः । शं नः सत्यस्य सुयमस्य शंसः

शं नो अर्य्यमा पुरुजातो अस्तु ॥ २ ॥ शं नो धाता शमु धर्त्ता नो अस्तु शं न उरुची भवतु स्वधाभिः । शं रोदसी बृहती शं नो अद्रिः शं नो देवानां सुहवानि सन्तु ॥ ३ ॥ शं नो अग्निर्ज्योतिरनीको अस्तु शं नो मित्रावरुणा-वश्विना शम् । शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभिवातु वातः ॥ ४ ॥ शं नो द्यावापृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु । शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥ शन्न इन्द्रो वसु-भिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः । शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥६॥ शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः । शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्वस्तु वेदिः ॥ ७ ॥ शं नः सूर्य उरुचक्षा उदेतु शं

नश्चतस्त्रः प्रदिशो भवन्तु। शं नः पर्वता ध्रुवयो
भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥
शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु
मरुतः स्वर्काः। शं नो विष्णुः शमु पूषा नो
अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥
शन्नो देवः सविता त्रायमाणः शं नो भवन्तूषसो
विभातीः। शं नः पर्जन्यो भवतु प्रजाभ्यः
शं नः क्षेत्रस्य पतिरस्तु शम्भु ॥ १० ॥ शं नो
देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभि-
रस्तु। शमभिषाचः शमु रातिषाचः शं नो
दिव्याः पार्थिवाः शं नो अप्याः ॥११॥ शं नः
सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु
सन्तु गावः। शं न ऋभवः सुकृतः सुहस्ताः शं
नो भवन्तु पितरो हवेषु ॥१२॥ शं नो अज
एकपाद्देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः।
शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु

देवगोपाः ॥ १३ ॥ ऋ० मं० ७ सू० ३५ । मं० १–३१ ।

इन्द्रो विश्वस्य राजति । शं नो अस्तु द्विपदे शं चतुष्पदे ॥१४॥ शं नो वातः पवताᳲ शं नस्तपतु सूर्य्यः । शं न कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥१५॥ अहानि शं भवन्तु नः शᳲ रात्रीः प्रतिधीयताम् । शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या । शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शंयोः ॥१६॥ शं नो देवीरभिष्टय आपो भवन्तु पीतये । शंय्योरभि स्रवन्तु नः ॥ १७ ॥ द्यौः शान्तिरन्तरिक्षᳲ शान्तिः । पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वᳲशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥१८॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम

शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥१६॥ यजु० अ० ३६ । मन्त्र ८।१०।११।१२।१७।२४॥

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति। दूरङ्गमं ज्योतिषां ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु ॥२०॥ येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २१ ॥ यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥२२॥ येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ॥ २३ ॥ यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः । यस्मिंश्चित्तꣳसर्व-

मोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ॥२४॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव। हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसंकल्पमस्तु ॥२५॥ यजु० अ० ३४। मन्त्र १—६

स नः पवस्व शङ्गवे शं जनाय शमर्वते। शं राजन्नोषधीभ्यः॥ २६ ॥ साम० उत्तरार्चिके० प्रपा० १। मन्त्र १॥ अभयं नः करत्यन्तरिक्षमभयं द्यावापृथिवी उभे इमे। अभयं पश्चादभयं पुरस्तादुत्तरादधरादभयं नो अस्तु ॥२७॥ अभयं मित्रादभयममित्रादभयं ज्ञातादभयं पुरो यः। अभयं नक्तमभयं दिवा नः सर्वा आशा मम मित्रं भवन्तु ॥२८॥ अथर्व० कां० १९। सू० १७। मन्त्र। ५। ६॥

इति शान्ति प्रकरणम्।

—:०:—

## अथ आचमनमन्त्राः ॥

(१) ओम् अमृतोपस्तरणमसि स्वाहा ।

(२) ओम् अमृतापिधानमसि स्वाहा ।

(३) ओं सत्यं यशः श्रीर्मयि श्रीः श्रयतां स्वाहा ।

तीन आचमन करें ।

## अथ इन्द्रियस्पर्शमन्त्राः ॥

ओं वाङ्म ऽआस्येऽस्तु । ओं नसोर्मे प्राणोऽस्तु । ओं अक्ष्णोर्मे चक्षुरस्तु । ओं कर्णयोर्मे श्रोत्रमस्तु । ओं बाह्वोर्मे बलमस्तु । ओं ऊर्वोर्मे ओजोऽस्तु । ओम् अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु ॥

इस मन्त्र से दाहिने हाथ से जल स्पर्श करके मार्जन करना, पूर्वोक्त समिधा चयन वेदी में करें, पुनः—

ओं भूर्भुवः स्वः ।

इस मन्त्र का उच्चारण करके ब्राह्मण, क्षत्रिय,, वैश्य के घर से अग्नि ला, अथवा घृत का दीपक जला उस से कपूर लगा किसी एक पात्र में धर उस में छोटी छोटी लकड़ी लगा के यजमान वा पुरोहित उस पात्र को दोनों हाथों से उठा, यदि गर्म

हो तो चिमटे से पकड़ कर अगले मन्त्र से अग्न्याधान करे, वह मन्त्र यह है:—

ओं भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवी ऽवरिम्णा। तस्यास्ते पृथिवी देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥१॥ यजु० अ० ३। मं० ५॥

इस मन्त्र से वेदी के बीच में अग्नि को धर उस पर छोटे २ काष्ठ और थोड़ा कपूर धर अगला मन्त्र पढ़ के व्यजन से अग्नि को प्रदीप्त करे।

ओं उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳसृजेथामयंच। अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत।

यजु० अ० १५। मन्त्र२४॥

जब अग्नि समिधाओं में प्रविष्ट होने लगे तब चन्दन की अथवा पलाश आदि की तीन लकड़ी आठ २ अंगुल की घृत में डुबो उन में से नीचे लिखे एक २ मन्त्र से एक २ समिधा को अग्नि में चढ़ावें, वे मन्त्र ये हैं—

ओं। अत्यन्त इध्म आत्मा जातवेदस्तेने ध्यस्व वर्धस्व चेद्ध वर्धय। चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा। इदमग्नये

जातवेदसे-इदन्न मम ॥१॥

ओ३म् । समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् आस्मिन् हव्या जुहोतन स्वाहा । इदमग्नये-इदन्न मम । ॥२॥ इससे और

ओ३म् । सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन । अग्नये जातवेदसे स्वाहा । इदमग्नये जातवेदसे-इदन्न मम ॥३॥

इस मन्त्र से अर्थात् इन दोनों मन्त्रों से दूसरी समिधा धरे।

ओ३म् । तं त्वा समिद्भिराङ्गिरो घृतेन वर्द्धयामसि । बृहच्छोचायविष्ठ्य स्वाहा । इदमग्नये-ऽङ्गिरसे-इदन्न मम ॥यजु० ।

यह तीनों मन्त्र यजु० । अ० ३ । मं० १-२-३ ॥

इस मन्त्र से तीसरी समिधा की आहुति देवे।

इन मन्त्रों से समिदाधान करके होम का शाकल्य जो कि विधिवत् बनाया हो सुवर्ण, चाँदी, काँसा आदि धातु के पात्र अथवा काष्ठ-पात्र में वेदी के पास सुरक्षित धरें, पश्चात् उपरि—लिखित घृत आदि जो कि उष्णाकर छान पूर्वोक्त सुगन्धादि पदार्थ मिला पात्रों में रक्खा हो, उस ( घृत वा अन्य मोहनभोगादि जो कुछ सामग्री हो, ) में से न्यून से न्यून ६ माशे भर अधिक से अधिक छटाँक भर की आहुति देवें, यही

आहुति का परिमाण है, उस घृत में से चमचा, कि जिस में ६ माशे ही घृत आवे ऐसा बनवाया हो, भरके नीचे लिखे मन्त्रों से पाँच आहुति देवें।

**ओ३म्। अयन्त इध्म आत्मा जातवेदस्तेनेध्यस्व वर्द्धस्व चेद्ध वर्द्धय। चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधय स्वाहा। इदमग्नये जातवेदसे—इदन्न मम।**

तत्पश्चात् अञ्जलि में जल ले के वेदी के पूर्व की दिशा आदि चारो ओर छिड़कावे, उस के ये यन्त्र हैं—

**ओं अदितेऽनुमन्यस्व॥** इस मंत्र से पूर्व,

**ओं अनुमतेऽनुमन्यस्व॥** इस से पश्चिम,

**ओं सरस्वत्यनुमन्यस्व॥** इस से उत्तर और

गोभिल गृ०। प्र० खं० ३। सू० १—३॥

**ओ३म्। देव सवितः! प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचं नः स्वदतु॥**

गोभिल गृ०। प्र० खं० ३। सू० १--३॥

इस मन्त्र से वेदी के चारों ओर जल छिड़कावें। इस के पश्चात सामान्य होमाहुति गर्भाधानादि प्रधान संस्कारों में अवश्य करें। इस में मुख्य होम के आदि और अन्त में जो आहुति

दी जाती है, उन में से यज्ञ-कुण्ड के उत्तर-भाग में जो एक आहुति और यज्ञ-कुण्ड के दक्षिण-भाग में दूसरी आहुति देनी होती है, उस को "आघारावाज्याहुति" कहते हैं। और जो कुण्ड के मध्य में आहुतियाँ दी जाती हैं, उन को "आज्यभागाहुति" कहते हैं, सो घृत-पात्र में से स्रुवा को भर अंगूठा मध्यमा अनामिका से स्रुवा पकड़ के—

**ओं अग्नये स्वाहा । इदमग्नये-इदन्न मम ॥**

इस मन्त्र से उत्तर-भाग अग्नि में।

**ओं सोमाय स्वाहा । इदं सोमाय-इदन्न मम ॥**

इस मन्त्र से वेदी के दक्षिण भाग में प्रज्वलित समिधा पर आहुति देवें, तत्पश्चात्—

**ओं प्रजापतये स्वाहा । इदं प्रजापतये-इदन्न मम ॥**

**ओं इन्द्राय स्वाहा । इदमिंद्राय—इदन्न मम ॥**

इन दोनों मन्त्रों से वेदी के मध्य में दो आहुति देव। पुनः—

**ओं भूरग्नये स्वाहा । इदमग्नये—इदन्न मम ॥**

**ओं भुववायवे स्वाहा । इदं वायवे-इदन्न मम ॥**

**ओं स्वरादित्याय स्वाहा । इदमदित्याय-इदन्न मम ॥**

**ओं भूर्भुवः स्वरग्निवाय्वादित्येभ्याः स्वाहा ॥ इदमाग्निवाय्वादित्येभ्यः-इदन्न मम ॥**

यह चार घी की आहुति दे कर स्विष्टकृत होमाहुति एक ही है, यह घृत अथवा भात की देनी चाहिये।

ओ३म् । यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यून मिहाकरम् । अग्निष्टात्स्विष्टकृद्विद्यात्सर्वं स्विष्टं सुहुतं करोतु मे । अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्द्धयित्रे सर्वान्नः कामान्त्समर्द्धय स्वाहा । इदमग्नये स्विष्टकृते-इदन्न मम ॥

इससे एक आहुति करके प्रजापत्याहुति नीचे लिखे मन्त्र को मनमें बोल के देनी चाहिये।

ओं प्रजायतये स्वाहा । इदं प्रजापतये । इदन्न मम

इस से मौन कर के एक आहुति दे कर चार आज्याहुति घृत की देवे, परन्तु जो नीचे लिखी आहुति चौल, समावर्तन और विवाह में मुख्य हैं, वे चार मन्त्र यह है।

ओ३म् । भूर्भुवः स्वः । अग्न ! आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनां स्वाहा । इदमग्नये पवमानाय-इदन्न मम ॥

ओ३म् । भूर्भुवः स्वः । अग्निर्ऋषिः पवमानः

पाञ्चजन्यः पुरोहितः। तमीमहे महागयं स्वाहा। इदमग्नये पवमानाय-इदन्न मम ॥

ओ३म् भूर्भुवः स्वः। अग्ने! पवस्व स्वपाऽस्मे वर्चः सुवीर्य्यम्। दधद्रयिं मयि पोषं स्वाहा। इदमग्नये पवमानाय-इदन्न मम ॥

ओ३म् भूर्भुवः स्वः। प्रजापते! न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा। इदं प्रजापतये-इदन्न मम ॥

इस से घृत की चार आहुतियाँ कर के नीचे लिखे मन्त्रों से ८ आठ आज्याहुति सर्वत्र मङ्गल-कार्य्यों में देवें।

ओं। त्वन्नो अग्ने! वरुणस्य विद्वान् देवस्य हेलो अवयासिसीष्ठाः यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् स्वाहा। इदमग्निवरुणाभ्यां-इदन्न मम॥१॥ओं। स त्वन्नो अग्ने ऽवमो भवोती, नेदिष्ठो अस्या उषसो व्युष्टौ अव यक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो

न एधि स्वाहा । इदमाग्नि बरुणाभ्यां-इदन्न मम ॥२॥ ओं। इमं मे वरुणा ! श्रुधी हवमद्याच मृडय । त्वामवस्युराचके स्वाहा ॥ इदं वरुणाय-इदन्न मम ॥३॥ ओं तत्त्वा यामि ब्रह्मणा वन्द-मानस्तदाशास्ते यजमानो हविर्भिः । अहेल-मानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः स्वाहा। इदं वरुणाय-इदन्न मम ॥४॥ ओं । ये ते शतं वरुण ! ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत विष्णु-र्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो म-रुद्भ्यः स्वर्केभ्य-इदन्न मम ॥५॥ ओं। अयाश्चाग्ने ! ऽस्यनभिशस्तिपाश्च सत्यमित्त्वमयासि । अ-या नो यज्ञं वहास्यया नो धेहि भेषज ँ स्वाहा। इदमग्नये अयसे-इदन्न मम ॥६॥ ओं उदुत्तमं वरुण ! पाशमस्मदवाधमं विमध्यमं श्रथाय । अथा वय मादित्यव्रते तवानागसोऽदितये स्याम

स्वाहा । इदं वरुणाय ऽऽदित्यायाऽदितये च-इदन्नमम ॥७॥ ओं । भवतन्नः समनसौ, सचेतसा-वरेपसौ । मा यज्ञ ँ हि ँ सिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः स्वाहा । इदं जातवेदोभ्यां-इदन्न मम ॥८॥ यजु० अ० ५।म० ।

सब संस्कारों में मधुर स्वर से मन्त्रोच्चारण यजमान ही करे, न शीघ्र, न विलम्ब से उच्चारण करे, किन्तु मध्य भाग जैसा कि जिस वेद का उच्चारण है, करे, यदि यजमान न पढ़ा हो, तो इतने मन्त्र तो अवश्य पढ़ लेवे । यदि कोई कार्य्यकर्त्ता मन्दमति काला अक्षर भैंस बराबर जानता हो, तो वह शूद्र है, अर्थात् शूद्र मन्त्रोच्चारण में असमर्थ हो, तो परोहित और ऋत्विज मन्त्रोच्चारण करे, और कर्म उसी मूढ़ यजमान के हाथ से करावे । निम्न लिखित मन्त्रों से प्रातः कालहवन करे ।

ओं सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः स्वाहा ॥१॥

ओं सूर्य्यो वर्चो ज्योतिर्वर्चः स्वाहा ॥२॥

ओं ज्योतिः सूर्य्यः सूर्य्यो ज्योति स्वाहा ॥३॥

ओं सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या जुषाणः सूर्य्यो वेतु स्वाहा ॥४॥

अब नीचे लिखे हुए मन्त्र सायंकाल के अग्नि-होत्र के जानो ।

ओं अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥१॥

ओं अग्निर्वर्चो ज्योतिर्वर्च्चः स्वाहा ॥२॥

ओं अग्निर्ज्योतिर्ज्योतिरग्निः स्वहा ॥३॥

इस मन्त्र को मन में उच्चारण कर के तीसरी आहुति देनी ।

ओं सजूर्देवेन सवित्रा सजूरात्र्येन्द्रवत्या जुषाणो अग्निर्वेतु स्वाहा ॥४॥

अब नीचे लिखे मन्त्रों से प्रातः सायं दोनों समय आहुति देनी चाहिये--

ओं भूरग्नये प्राणाय स्वाहा ॥ इदमग्नये प्राणाय इदन्न मम ॥१॥ ओं भुवर्वायवेऽपानाय स्वाहा ॥ इदं वायवेऽपानाय-इदन्न मम ॥२॥ ओं स्वरादित्याय व्यानाय स्वाहा ॥ इदमादित्याय व्यानाय-इदन्न मम ॥३॥ ओं भूर्भुवःस्वराग्निवायवा-दित्येभ्यः प्राणापानव्यानेभ्यः स्वाहा ॥ इदमग्नि-वाय्वादित्येभ्यः प्राणापानव्यानेभ्यः--इदन्न मम ॥४॥ ओं आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरों स्वाहा ॥५॥ ओं यां मेधां देवगणाः पितरश्चोपासते तया मामद्य मेधयाऽग्ने! मेधाविनं कुरु स्वाहा ॥६॥

ओं विश्वानि देव! सवितर्दुरितानि परासुव। यद्भद्रं तन्न आसुव स्वाहा ॥ ७ ॥ ओं अग्ने ! नय सुपथा राये अस्मान्। विश्वानि देव! वयुनानानि विद्वान् युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम स्वाहा ॥८॥

इन आठ मन्त्रों से एक २ मन्त्र करके एक २ आहुति ऐसे आठ आहुति देके:—

ओं सर्वं वै पूर्णं ँ स्वाहा ॥

इस मन्त्र से तीन पूर्णाहुति अर्थात् एक २ बार पढ़ के एक २ करके तीन आहुति देवें।

इत्याग्निहोत्रविधिः संक्षेपतः समाप्तः ॥

# सन्ध्या

* अथाचमनमन्त्रः *

ओ३म्। शन्नो देवीरभिष्टय, आपो भवन्तु पीतये। शंयोरभिस्त्रवन्तु नः ॥१॥ यजुर्वेद। अ० ६। मं०१२॥

सर्वव्यापक और सर्व प्रकाशक परमेश्वर चाहे हुए फल और आनन्द की प्राप्ति के लिये हम को कल्याण कारी हो, और हम पर सुख की सर्वदा वृष्टि करे ॥१॥

* अथेन्द्रियस्पर्शः *

ओं वाक् वाक्। ओं प्राणः प्राणः। ओं चक्षुः

चक्षुः । ओं श्रोत्रं श्रोत्रम् । ओं नाभि । ओं हृदयम् । ओं कंठः । ओं शिरः । ओं बाहुभ्यां यशोबलम् । ओं करतलकरपृष्ठे ॥२॥

हे ईश्वर । मेरी वाणी, प्राण, आँख, कान, नाभि, हृदय, कंठ और शिर को बलवान् कीजिये । हमारी दोनों बाहुओं में यश और बल हो, और हाथ के ऊपर और नीचे के भाग से धर्म युक्त कार्य करें ॥२॥

॥ अथेश्वरप्रार्थनापूर्वकमार्जनमन्त्राः ॥

ओं भूः पुनातु शिरसि । ओं भुवः पुनातु नेत्रयोः । ओं स्वः पुनातु कंठे । ओं महः पुनातु हृदये । ओं जनः पुनातु नाभ्याम् । ओं तपः पुनातु पादयोः । ओं सत्यं पुनातु पुनः शिरसि । ओं खं ब्रह्म पुनातु सर्वत्र ॥३॥

हे ईश्वर । आप मेरे शिर, नेत्र, कंठ, हृदय, नाभि, पैर, और शिरादि सब को पवित्र करके बलवान् कीजिये ।३।

॥ अथ प्राणायाममन्त्राः ॥

ओं भूः । ओं भुवः । ओं स्वः । ओं महः । ओं जनः । ओं तपः । ओं सत्यम् ।४॥

ईश्वर प्राण स्वरूप, पवित्र करने हारा, आनन्द स्वरूप, सब से बड़ा, सब का पिता, सब का तपाने वाला अविनाशी है ॥४।

* अथेश्वरस्य जगदुत्पादनद्वारा स्तुत्याऽघमर्षणमन्त्रा अर्थात् पापदूरीकरणार्था: *

ओं । ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत, ततः समुद्रो अर्णव ॥१॥५॥

ज्ञानमय और अनन्त सामर्थ्य वाले ईश्वर से वेद और कार्य्य रूप प्रकृति उत्पन्न हुई । उसी की सामर्थ्य से प्रकृति की दूसरी विकृति अवस्था और उसी की सामर्थ्य से सूक्ष्म जल ॥१॥

ओं । समुद्रादर्णवादधि, संवत्सरो अजायत । अहोरात्राणि विदधद्, विश्वस्य मिषतो वशी॥२॥६

जगत् को वश में रखने वाले परमेश्वर ने अपने सहज स्वभाव से उस सूक्ष्म जल के पीछे, काल के विभाग अर्थात दिन और रात बनाने वाली गति को उत्पन्न किया ॥२॥६॥

ओं । सूर्य्याचन्द्रमसौ धाता, यथापूर्वमकल्पयत् । दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥३॥७॥

ऋ० । मण्डल १० । सूक्त मन्त्र १९० । मन्त्र १ — ३॥

विधाता ने पहले कल्प के समान सूर्य्य, चन्द्र दिव्य लोक पृथिवीं लोक अन्तरिक्ष और सब लोक-लोकान्तर बनाये ॥३॥७॥

* अथ मनसापरिक्रमा मन्त्रः *

ओं । प्राची दिग् ,अग्निराधिपति, रसितो रक्षिता ऽदित्या इषवः । तेभ्यो नमो, ऽधिपतिभ्यो नमो

रक्षितृभ्यो नम, इषुभ्यो नम, एभ्योऽस्तु । यो ऽस्मान् द्वेष्टि, यं वयं द्विष्मस्, तं वो जम्भे दध्मः ।१।८

हे सर्वज्ञ परमेश्वर ! आप हमारे सम्मुख की ओर विद्यमान हैं। स्वतन्त्र राजा और रक्षा करने वाले हैं। आप ने सूर्य को रचा है, जिस की किरणों के द्वारा पृथिवी पर जीवन आता है। आप के आधिपत्य, रक्षा और जीवन-प्रदान के लिये प्रभो ! आप को बारम्बार नमस्कार है । जो हम से द्वेष करता है, अथवा जिस से हम द्वेष करते हैं, उसे हम आप के न्यायरूपी सामर्थ्य पर छोड़ देते हैं ॥१॥८॥

ओं । दक्षिणा दिग्, इन्द्रोऽधिपतिस्, तिरश्चिराजी रक्षिता, पितर इषवः । तेभ्यो नमो, ऽधिपतिभ्यो नमो, रक्षितृभ्यो नम, इषुभ्यो नम, एभ्योऽस्तु । योऽस्मान् द्वेष्टि, यं वयं द्विष्मस्, तं वो जम्भे दध्मः ॥२॥६॥

हे परमेश्वर ! आप हमारे दक्षिण की ओर व्यापक हैं। आप हमारे राजाधिराज हैं । टेढ़े चलने वाले प्राणियों से हमारी रक्षा करते हैं, और ज्ञानियों के द्वारा हमें ज्ञान प्रदान करते हैं। आप के ( आगे पूर्ववत् )

ओं । प्रतीची दिग्, वरुणोऽधिपतिः, पृदाकू रक्षिता, ऽन्नमिषवः । तेभ्यो नमो, ऽधिपतिभ्यो नमो,

राक्षतृभ्यो नम, इषुभ्यो नम, एभ्योऽस्तु। योऽस्मान् द्वेष्टि, यं वयं द्विष्मस्, तं वो जम्भे दध्मः॥३॥१०॥

हे सौंदर्य के भण्डार! आप हमारे पृष्ठ की ओर हैं। हमारे महाराज हैं, और बड़े २ विषधारी प्राणियों से हमारी रक्षा करने वाले आप हमारे प्राण अन्न द्वारा रखते हैं। आप के (पूर्ववत)

ओं। उदीची दिक, सोमोऽधिपतिः, स्वजोरक्षिता ऽशनिरिषवः। तेभ्यो नमो, ऽधिपतिभ्यो नमो, रक्षितृभ्यो नम, इषुभ्यो नम, एभ्योऽस्तु। योऽस्मान्द्वेष्टि, यं वयं द्विष्मस्, तं वो जम्भे दध्मः।४।११

हेपिता! आप हमारे बाईं ओर व्यापक हैं, और हमारे परम स्वामी हैं। आप स्वयम्भू और हमारे रक्षक हैं। आप ही बिजली द्वारा हमारे रुधिर की गति और प्राण की रक्षा करते हैं आप के (पूर्ववत)

ओं। ध्रुवा दिग्, विष्णुरधिपतिः, कल्माषग्रीवो रक्षिता, वीरुध इषवः। तेभ्यो नमो, ऽधिपतिभ्यो नमो, रक्षितृभ्यो नम, इषुभ्यो नम, एभ्योऽस्तु। योऽस्मान् द्वेष्टि, यं वयं द्विष्मस्, तं वो जम्भे दध्मः ॥५॥१२॥

हे सर्वव्यापक! ईश्वर आप हमारे नीचे की ओर विद्यमान हैं। हैं। आप हमारे राजा हैं। आप हरे रंग वाले वृक्षों और बेलों के द्वारा हमारे प्राणों की रक्षा करते हैं। आप के (पूर्ववत्)॥१२॥

ओं३म् । ऊर्ध्वा दिग् ,बृहस्पति रधिपतिः, श्वित्रो रक्षिता, वर्षमिषवः । तेभ्यो नमो, ऽधिपतिभ्यो नमो, रक्षितृभ्यो नम, इषुभ्यो नम, एभ्योऽस्तु योऽस्मान् द्वेष्टि, यं वयं द्विषमस् , तं वो जम्भे दध्मः ॥६॥१६॥

अथ० ३। २०। १—

हे महान् प्रभो! आप ऊपर की ओर व्यापक, पवित्र आत्मा हमारे स्वामी और रक्षक हैं। आप मेंह बरसा कर हमारी कृषि को सींचते हैं। जिस से हमारा जीवन होता है । आप के ( पूर्ववत् ) ॥६॥१६॥

* अथोमस्थानमन्त्राः *

ओं । उद्वयं तमसस्परि, स्वः पश्यन्त उत्तरम् देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् ।१। १४॥

यजु० । अ० ३५ । मन्त्र १४

हे प्रभो ! आप अज्ञान अन्धकार से परे सुखस्वरूप प्रलय के पश्चात् रहने वाले दिव्यगुणों के साथ, सर्वत्र विद्यमान देव और हम को जन्म देने वाले हैं। आप को इस प्रकार देखते हुए हम लोग आप की उत्तम ज्योति को प्राप्त करें ॥१॥१४॥

ओं उदुत्यं जातवेदसं, देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम् ॥२॥१५॥

यजु० । ३३ मन्त्र ३१ ॥

हे जगदीश्वर ! आप वेदों के उत्पादक और प्रकाश-स्वरूप हैं। आप की महिमा सब को दिखाने के लिये संसार के पदार्थ

पताका का काम देते हैं। (जिस प्रकार भंडियां मार्ग दिखलाती हैं, उसी प्रकार सब को स्वाभाविक वस्तुएं आप की प्रतीति कराती हैं) ॥२।१५॥

ओं। चित्रं देवानामुदगादनीकं, चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्ष ऽँ सूर्य्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥३॥१६॥

हे ईश्वर! आप विद्वानों में अद्भुत और श्रेष्ठ हैं और मित्र, वरुण तथा अग्नि आदि विद्वानों की आंख हैं। द्युलोक, पृथिवी लोक और अन्तरिक्ष लोक के धारण करने वाले और चलने वाले तथा न चलने वाले प्राणियों के उत्पादक तथा अन्तर्यामी हैं, हम आप को प्राप्त होवें ॥३॥१६॥

ओं। तच्चक्षुर्देवहितं, पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं, जीवेम शरदः शत ऽँ, शृणुयाम शरदः शतं, प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्, भूयश्च शरदः शतात् ॥४॥१७॥

यजुर्वेद। अ० ३६। मन्त्र २४॥

हे सब के देखने वाले! आप अनादि काल से विद्वानों और संसार के हितार्थ शुद्ध वर्तमान हैं। हे प्रभो! हम आप को सौ वर्ष सुनें, आप के नाम का सौ वर्ष व्याख्यान करें, सौ वर्ष से अधिक आयु हो, तो भी इसी प्रकार विचारें ॥४॥१७॥

❀ गायत्री, सावित्री, गुरु मन्त्र ❀

ओ३म् भूर्भुवः स्वः। तत्सवितुर्व्वरेण्यं, भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॥१२॥

य० । अ० ३६ मं० ३ ॥ ऋ० मंड ३ सू० ६२ मंत्र १० ॥ साम० उत्तर संहिता । प्र० ७ । मंत्र १० ॥

हे प्राण पवित्रता और आनन्द के देने वाले प्रभो । जो आप सर्वज्ञ और सकल-जगत्के उत्पादक हैं, हम आप के उस पूजनीयतम पाप-विनाशक विज्ञान-स्वरूप तेज का ध्यान करते हैं जो हमारी बुद्धियों का प्रकाश करता है । हे पिता ! आप से हमारी बुद्धि कदापि विमुख न हो । आप हमारी बुद्धियों में सदैव प्रकाशित रहें, और हमारी बुद्धियों को सत्कर्मों में प्रेरित करते रहें ॥१८॥

## ॐ अथ समर्पणम् ॐ

हे ईश्वर दयानिधे ! भवत्कृपयाऽनेन जपोपासनादिकर्मणा धर्मार्थकाममोक्षाणां सद्यः सिद्धिर्भवेन्नः ॥ तत ईश्वरं नमस्कुर्यात—

हे ईश्वर दयानिधे ! आपकी कृपा से जो जो उत्तम काम हम लोग करते हैं वे सब आपके अर्पण हैं जिससे हम लोग आपको प्राप्त होके, धर्म जो सत्य न्याय का आचरण करना है, अर्थ जो धर्म से पदार्थों की प्राप्ति करना है, काम जो धर्म और अर्थ से इष्ट भोगों का सेवन करना है, और मोक्ष जो सब दुःखों से छूट कर सदा आनन्द में रहना है । इन चार पदार्थों की सिद्धि हम को शीघ्र प्राप्त हो ।

**ओं । नमः शंभवाय च, मयोभवाय च नमः शंकराय च, मयस्कराय च । नमः शिवाय च, शिवतराय च ॥१६॥ य० १६।४१॥**

नमस्कार है कल्याण और सुख के स्रोत ( चश्मे ) को, कल्याण-स्वरूप और अत्यन्त कल्याण स्वरूप आप को बारम्बार हमारा नमस्कार है ॥१६॥

इति सन्ध्या समाप्ता ।